# यमापत्ति

ऊष्मप्रकृतिका स्पर्शात्पञ्चमः परतो यदि
तत्र नैव यमापत्तिरिष्यते नात्र संशयः १
वर्गान्तं शषसैस्सार्द्धमन्तस्थाभिश्च संयुतम्
दृष्ट्वा यमा निवर्तन्ते इत्युक्तं वर्णवेदिभिः २
लकारस्य वकारेण संयोगे स्वरिते यदि
विशेषं तत्र जानीयाद्द्वित्वमित्यभिधीयते ३
अन्तस्थाद्युदये पूर्वं पञ्चमश्च द्विरुच्यते
इतरादौ परे तत्र स न चेति स्मृतो बुधैः ४
ऋकार पूर्वः प्रथमो हल्परस्त्वेकमात्रिकः
ऋकारात्प्रथमस्यापि द्वित्वं न स्यात्कथंचन ५
पदान्तस्य नकारस्य वकाराद्पपरे यदि
संयोगे परभूते च द्वित्वमित्यभिधीयते ६
अवग्रहो न कारो यः पदान्ते यत्र दृश्यते
विशेषं तत्र जानीयाद्द्वित्वमित्यभिधीयते ७
रेफात्पूर्वो न कारो यः पदान्तो यत्र दृश्यते
संयुक्तन्तत्र जानीयाद्द्वित्वमित्यभिधीयते ८
पदान्तस्य न कारस्य हकारः परतो यदि
ऋपरो यपरो वापि द्वित्वमित्यभिधीयते ९
पदादौ पदमध्ये वा स्थितस्योष्मपरस्य वै
प्रथमस्य द्वितीयत्वं पूर्वं कुर्वीत पण्डितः १०
हरिः ओम्
उच्चात्परोनुदात्त स्यात्स्वरितः स्वरितात्परे
नीचा स्युः प्रचया एतौ न ह्युच्चस्वरितोत्तरे ११

नीचोच्चयोगजो नीचविकारश्चेति स द्विधा
अभ्येव त्वे वसून्नियंतेऽग्निं सोऽग्निं द्वियोगजः १२
इति स्वरविषयः
एवं स स्वरमात्रिकांगविहितानां वर्णसारं क्रमात्
प्रब्रूयात्तु स पूर्विकांश्च विधिवत्तान् पञ्चवर्णक्रमान् १३

Reference:

Yamāpatti, pages 43 and 154 in the Ātreya Śikṣā palm leaf bundle, Staats-Universitaets Bibliothek, Hamburg, Germany, Grantha script on palm leaves, 1 folio (each), Palm-leaf bundle III 8/133.

Yamāpatti, in C.K. Raja and K.M.K. Sarma, *Descriptive Catalogue of Sanskrit Manuscripts in the Adyar Library, Volume 1: Vedic,* Adyar Library and Research Center: Madras, 1942, p. 320.